श्रीहरिर्जयति । श्रीगोपीजनवल्लभोजयति । श्रीविठ्ठलेश्वरंनत्वास्वेषांस्वफलसिद्धये ॥ पुष्टिप्रवाहमर्यादाविवृत्तिः क्रियतेमया । १ । लोकेकतिमार्गाःकीदृशाःकिंचतेषांफलमितिजिज्ञासूनांस्वकीयानांज्ञानार्थंश्रीवल्लभाचार्याःपुष्टिप्रवाहमर्यादां विशेषेणवक्तुंमतिजानते । **पुष्टिप्रवाहेति । पुष्टिप्रवाहमर्यादाविशेषेणपृथक्पृथक् । जीवदेहक्रियाभेदैःप्रवाहेन फलेनच** । १ । पुष्टिर्नामभगवदनुग्रहः । फलप्रापकत्वात्फलार्थंमृग्यतइतिसएकोमार्गः । प्रवाहोजन्मादिप्रवाहरूपः । लौकिकफलप्रापकत्वात्सोऽपिमार्गः । मर्यादावेदोक्तकर्ममार्गः । एताविशेषेणव्यावर्तकधर्मेण पृथक्पृथक्वक्ष्यामि । अत्रकेव्याव-र्त्तकाधर्माइत्याकांक्षायामाहुः । **जीवदेहेति** । भक्तिमार्गेजीवाभगवदनुगृहीताभिन्नास्तेषांदेहाभगवच्चरणरेण्वादिनिष्पादिताभिन्नास्तेषांक्रियाभगवत्पराभिन्नाः । एवंप्रवाहासक्ताःसंसारिणोजीवाःभिन्नाःतेषांदेहाःसंस्कारादिरहिताभिन्नास्तेषांक्रियालौकिक्योभिन्नामर्यादामार्गेदैवाजीवाभिन्नास्तेषांदेहाःसंस्कारादिरहिताभिन्नास्तेषांक्रियालौकिक्योभिन्नाःमर्यादामार्गेदैवाभिन्नास्तेषांदेहाःसंस्कृताभिन्नास्तेषांवेदोक्ताःक्रियाभिन्नाःप्रवाहासक्तत्वेनप्रवाहएवतेषांप्रावाहिकानांभेदकः । मद्भक्तायांतिमामपीत्यादिवाक्याद्भक्तिमार्गेपुरुषोत्तमप्राप्तिःफलं । मर्यादामार्गेवेदोक्तकर्मभिःनिःकामानांतत्त्वज्ञानद्वाराअक्षरप्राप्तिःफलं ॥ सकामानांक्षयिष्णुस्वर्गादिःफलं । प्रवाहस्थानांस्वस्वकर्माऽनुसारिजन्मादिफलं । भिन्नैरेतैर्मार्गाअपिभिन्नाभवंतीत्यर्थः । कथनस्यप्रयोजनमाहुः । **वक्ष्यामीति । वक्ष्यामिसर्वसंदेहानभविष्यंतियच्छ्रुतेः । भक्तिमार्गस्यकथनात्पुष्टिरस्तीतिनिश्चयः** । २ ॥ यस्योक्तस्यश्रवणान्मार्गतत्साधनफलेषुसंदेहानभविष्यंतीत्यर्थः । मार्गसत्त्वेप्रमाणानिवक्तुंप्रथमंपुष्टिसत्त्वेप्रमाणमाहुः ॥ **भक्तिमार्गस्येति** । तेनाधीतश्रुतिगणाइत्यादिनानिःसाधनत्वेननिरूपितानांव्रजस्थितानांकेवलेनहिभावेने

त्यादिवाक्यैःस्नेहनिरूपणाद्भक्तिरूपस्यमार्गस्यकथनाद्भक्तिकारणत्वेनपुष्टिर्निश्चीयतइत्यर्थः । ननुदानव्रतादिभिःभक्तेःश्रूयमाणत्वात्कथंभक्तिकारणत्वेनपुष्टिर्निश्चीयतइतिचेत् । अनुग्रहव्यापारत्वेनभक्तेर्भगवदनुग्रहैकसाध्यत्वान्निःसाधनोऽनुग्रहःपुष्टिरित्युच्यते । साधनदिश्रभावात्ससाधनोऽनुग्रहोभक्तिमार्गेमर्यादेत्युच्यते । तेनसमाधानानुग्रहएवदानादिःसाधनद्वाराभक्तिंजनयतीतिनानुपपन्नंकिंचित् । एतदेवोक्तंभक्तिहंसे । भक्तिमार्गीयभक्तकृतभक्तिसांप्रदायिकदीक्षापूर्वकंमोक्षसाधनत्वेनक्रियमाणःश्रवणादि ःप्रावाहिकीभक्तिरुच्यतइतिमर्यादामार्गस्थंज्ञानमार्गस्थंवाजीवंयदिभगवाननुगृण्हातितदासपुष्टिमार्गेप्राप्यतन्मार्गीयंफलंप्राप्नोति । एतदेवोक्तंसिद्धांतमुक्तावल्यां । उभयोस्तुक्रमेणैवपूर्वोक्तैवफलिष्यतीतितेनानुग्रहसाध्याभक्तिरितिसिद्धं । अतःसूक्तंभक्तिमार्गस्यकथनात्पुष्टिरस्तीतिनिश्चयइति ॥ प्रवाहसत्वेप्रमाणमाहुः । **द्वौभूतसर्गावित्युक्तेःप्रवाहोपिव्यवस्थितः।वेदस्यविद्यमानत्वान्मर्यादाऽपिव्यवस्थिताः** । द्वौभूतसर्गाविति । द्वौभूतसर्गौलोकेस्मिन्दैवआसुरएवचेतिवाक्यात्प्रवाहोऽपिसिद्धः । मर्यादासत्वेप्रमाणमाहुः । **वेदस्येति** । कांडद्वयात्मकस्यवेदस्यश्रूयमाणत्वान्मर्यादामार्गोऽपिसिद्धइतिभक्तेःपुष्टिसाधकत्वमुक्त्वाऽतुलत्वमाहुः । **कश्चिदेवहीति** । **कश्चिदेवहिमद्भक्तोयोमद्भक्तइतीरणात्** । **सर्वत्रोत्कर्षकथनात्पुष्टिरस्तीतिनिश्चयः** । कश्चिदेवहिमद्भक्तोभवतिनसर्वः । अन्यथाभगवान्योमद्भक्तइतिनवदेत् । भक्तेःपुष्टिसाधकत्वमुक्त्वाभक्तिभक्तयोरुत्कर्षस्यापिपुष्टिसाधकत्वमाहुःसर्वत्रगीताश्रीभागवतादौभक्त्यामामभिजानातिभक्त्यात्वनन्ययाशक्यइत्यादिना । यत्कर्मभिर्यत्तपसेत्यारभ्यसर्वंमद्भक्तियोगेनमद्भक्तोलभतेंजसेत्यंतेन । भक्तिंलब्धवतःसाधोःकिमन्यदवशिष्यते । मय्यनंतेगुणेब्रह्मण्यानंदाऽनुभवात्मनि । नालंद्विजत्वंदेवत्वमित्युपक्रम्यप्रीयतेऽमलयाभक्त्याहरिरन्यद्विडंबनमित्यंतेन । मय्यावेश्येत्यारभ्य

तेमेयुक्ततमामताइत्यंतेन । येभजंतितुमांभक्त्यामयितेतेषुचाप्यहं । कौंतेयप्रतिजानीहिनमेभक्तःप्रणश्यति । तामन्मनस्कामत्मा णामदर्थेत्यक्तलौकिकाः । येत्यक्तलोकधर्माश्चमदर्थेतान्बिभर्म्यहं ॥ अहंभक्तपराधीनइत्युपक्रम्य । वशेकुर्वंतिमांभक्त्यासत्स्त्रि यःसत्पतिंयथेत्यंतेन । एताःपरमित्यारभ्यपुनातिभुवनत्रयमितिश्लोकषट्केचउत्कर्षकथनात् । पुष्टिरस्तीतिनिश्चीयतइत्य र्थः । नहिभक्तिर्भक्तत्वमेतादृशोर्योभगवदनुग्रहंविनाप्राप्यते । पुष्टिमार्गीयस्यप्रवाहमर्यादामार्गस्थाभ्यांभेदमाहुः । **नसर्वो तःप्रवाहाद्धिभिन्नोवेदाच्चभेदतः । यदायस्येतिवचनान्नाहंवेदैरितीरणात्** । यदायस्यानुगृण्हातिभगवानात्मभा वितः । सजहातिमतिंलोकेवेदेचपरिनिष्ठितामितिवाक्याद्यंभगवाननुगृण्हातिसपुष्टिमार्गीयोभवतिनसर्वः । अतःप्रवाहाद्भेदः । हियुक्तोयमर्थस्ततोवैलक्षण्यात् । नाहंवेदैरित्यारभ्यपरंतपेत्यंतेनअनन्यभक्त्यैवभगवान्ज्ञातुंद्रष्टुंचशक्यः । नान्यसाधनैरितिभेद तःवैलक्षण्यात् । वेदाच्चभिन्नःवेदोक्तमर्यादामार्गस्थादपिपुष्टिमार्गस्थभक्तोभिन्नइत्यर्थः । कस्यचित्पूर्वपक्षंनिराकुर्वंति । **मार्गै कत्वेति । मार्गैकत्वेपिचेदंत्यौतनूभक्त्यागमौमतौ । नतद्युक्तंसूत्रतोहिभिन्नोयुक्त्याहिवैदिकः** । तथाहि । न नुप्रवाहमर्यादामार्गयोरपिव्यवहारशुद्धिसाधकत्वेनभक्त्युपयोगादंगांगिभावेनैक्येभक्तिमार्गएवास्त्वितिचेन्न । मार्गैकत्वेस्वीक्रि यमाणे प्रवाहमर्यादामार्गांवंगत्वेन भक्तिफलप्रापकत्वेनतवसंमतौतन्नयुक्तं । यदिप्रवाहमर्यादामार्गयोःभक्तिफलेन फलवत्त्वंस्या त्तदातदंगत्वंस्यात्तदेवांगंभवति । यत्प्रधानफलेनफलवद्भवति । स्वतःप्रयाजादिवत् फलवत्संनिधावफलंतदंग मित्यंगलक्षणात् । अत्रभक्तिमार्गेतन्निष्ठस्यमोक्षोपदेशादितिव्याससूत्रेणभगवत्परस्यमोक्षःफलत्वेनोच्यते । भक्तिमीमांसायांशां डिल्यसूत्रंतत्संस्थस्यामृतत्वोपदेशादिति । अस्यार्थस्तुतस्मिन्नीश्वरेसंस्थाभक्तिर्यस्यतस्यामृतत्वंफलमुपदिश्यते । ब्रह्मसंस्थो

ऽमृतत्वमेतीति । एतद्विचारणस्य भगवत्प्राप्तिफलकत्वात् । प्रवाहमर्यादामार्गयोर्जन्मादिसंसारस्वर्गादिफलकत्वात् । परंपरया निमित्तकारणत्वेनदेशादिवदुपयोगात्तयोर्न भक्तिमार्गैकत्वसिद्धिः । युक्तिस्तु । यदिमर्यादामार्गोभक्तिमार्गाभिन्नःस्यात्तदाभक्तिमार्गीयमेवफलंदद्यात् । स्वर्गादिफलदातृत्वाद्वैदिकोमार्गोभिन्नः । अलौकिकफलदातृत्वाभावात्प्रवाहोनोक्तः । पुष्टिमार्गस्य भेदज्ञानार्थंतत्रत्यानांवैलक्षण्यमाहुः । **जीवदेहेति । जीवदेहकृतीनांचभिन्नत्वंनित्यताश्रुतेः । यथातद्वत्पुष्टिमार्गेद्वयोरपिनिषेधतः ॥** यथाश्रुतेर्वेदस्यलौकिकवाक्यसमानत्वेनगृह्यमाणस्यापिनित्यता । स्वयंभूरेषभगवान्वेदोगीतस्त्वयापुरा । शिवाद्याऋषिपर्यंताःस्मर्त्तारोस्यनकारकाः । वेदोनारायणःसाक्षात्स्वयंभूरितिशुश्रुमइत्यादिवाक्यैर्लौकिकवाक्यभिन्नत्वं तथा पुष्टिमार्गेजयानंतजननिवासइत्यादिवाक्यैर्लीलास्थानांजीवदेहकृतीनांनित्यत्वंचेत्यर्थः । अथवातेनेधनात्युष्मसिश्रुतेः । यथागमष्येगावइतिवेदात् लीलास्थानांजीवदेहकृतीनांनित्यताभिन्नत्वंभवतीत्यर्थः । अतःकारणात् **द्वयोरपिनिषेधतइति**। सजहातिमतिंलोकेवेदेचपरिनिष्ठिताभितिवाक्येनभगवदनुग्रहानंतरंप्रवाहमर्यादामार्गयोर्निषेधात् प्रवाहमर्यादामार्गस्थयोर्देहादीनांभिन्नत्वंनित्यताचनभवतीत्यर्थः **प्रमाणभेदाद्भिन्नोहिपुष्टिमार्गोनिरूपितइति** । पुष्टिमार्गेभगवाननुग्रहेणपुष्टिमार्गस्थंयथाज्ञापयतियथाप्रेरयतितथासमवर्त्तते । अतःपुष्टिमार्गेभगवान्प्रमाणं । भगवदनुग्रहश्च । तस्मात्प्रमाणभेदादपिपुष्टिमार्गोभिन्नइत्यर्थः। त्रयाणांसर्गभेदमाहुः । **सर्गभेदंप्रवक्ष्यामिस्वरूपांगक्रियायुतं** । जीवदेहक्रियासहितंभिन्नंसर्गंप्रवक्ष्यामीत्यर्थः । त्रयाणां सर्गाणांभेदेकिंनिमित्तमित्याकांक्षायामाहुः । **इच्छामात्रेणमनसाप्रवाहंसृष्टवान्हरिः । वचसावेदमार्गंहिपुष्टिंकायेन निश्चयइति** । इच्छामात्रेणसामान्येच्छयामल्लादिपुद्भवन्नतुस्वयंतत्ररंतुंहरिःमनसाप्रवाहंसृष्टवान् । सोऽकामयतबहुस्यांप्रजा

येयेतिश्रुतेः । वचसावेदवाण्यावेदमार्गसृष्टवान् कायेनस्वरूपेणपुष्टिमार्गस्थान्सृष्टवान् । सवैनैवरेमेतस्मादेकाकीनरमतेसद्वितीय
मैच्छत्सहैतावानासेतिश्रुतेः । अतएववाराहपुराणे । भिन्नैवकाचित्सासृष्टिर्विधातुर्व्यतिरेकिणीति । अथवास्वयमाविर्भूयभक्तैः
स्वसेवांकारयित्वातन्मार्गंप्रकटितवानित्यर्थः । त्रयाणांमार्गाणांफलभेदादपिभेदमाहुः । मूलेच्छातःफलंलोकेवेदोक्तंवैदि
केऽपिच । कायेनतुफलंपुष्टौभिन्नेच्छातोऽपिनैकधेति । मूलंसृष्टिकरणंब्रह्म तस्यसर्गादौअस्यानेनैवमेवंकरिष्यामीती
च्छा ततएवप्रवाहस्थानांफलमित्यर्थः । वैदिकेकर्ममार्गेवेदोक्तंस्वर्गापवर्गरूपमपिफलंभवतीत्यर्थः । पुष्टौपुष्टिमार्गे कायेनस्वरूपे
णफलंभवतीत्यर्थः । तदुक्तं । गोपीभिस्तोभितोनृत्यदित्यादिना । पुष्टौप्रवाहमर्यादाभ्यांभिन्नेच्छातोऽपिजातंफलंकौमारलीलादि
रूपेणानेकविधंभवतीत्यर्थः । प्रमाणपूर्वकंप्रवाहस्थान्जीवान्भिन्नानाहुः । तानहंद्विषतोवाक्याद्भिन्नाजीवाःप्रवाहिणः ।
अतएवेतरौभिन्नौसांतौमोक्षप्रवेशतइति। भूतसर्गेदैवजीवेषुभगवदनुगृहीताभक्तिमार्गीयाभवंति । अन्येदैवाएव। कर्मिणः
वेदोक्तफलभाजोभवंति । अवशिष्टाःजीवाः प्रवृत्तिंचनिवृत्तिंचेत्यारभ्यप्रद्विषंतोभ्यसूयकाइत्यंतेननिरूपिताः । तेषांतानहंद्विषतः
क्रूरानित्यारभ्य ततोयांत्यधमांगतिमित्यंतेनाधमगतित्वेननिरूपणात्प्रवाहस्थाअसुराःपूर्वोक्तेभ्योभिन्नाइत्यर्थः । अतएवेतरौ पु
ष्टिमार्गीयमर्यादामार्गीयजीवावेभ्योभिन्नौ तत्रहेतुः। सांतौ अंतःफलपर्यवसानं तत्सहितौ कुतःमोक्षंप्रवेशतइति । मर्यादामार्गीय
स्यमोक्षात्पुष्टिमार्गीयस्यप्रवेशतःलीलाप्रवेशतइत्यर्थः । अत्युत्कर्षादपिपुष्टिमार्गीयाणांभेदमाहुः । तस्माज्जीवाःपुष्टिमार्गेभिन्नाए
वनसंशयः । भगवद्रूपसेवार्थंतत्सृष्टिर्नान्यथाभवेदिति । यस्मात्सर्वोत्कृष्टास्तस्मात्पुष्टिमार्गीयजीवास्तेभ्योभिन्नाएवेत्यर्थः । विप
क्षेबाधकंकर्माहुः । भगवद्रूपसेवार्थमिति । यदिपुष्टिमार्गीयाःसर्वोत्कृष्टानस्युस्तदा साक्षात्पुरुषोत्तमस्वरूपसेवार्थंतत्सृष्टिर्नभवेत् ।

शुद्धपुष्टिमार्गीयाणांसेवार्थं तत्सृष्टिर्नभवेत् । शुद्धपुष्टिमार्गीयाणांसेवार्थंसाहंकारियोग्यतामाहुः । **स्वरूपेणावतारेणलिं
गेनचगणेनच । तारतम्यंनस्वरूपेदेहेवातत्क्रियासुचेति** ॥ लीलासृष्टेर्भगवद्रूपत्वात्स्वरूपसाम्यं । यथाभगवदवतारः
प्रादुर्भावोनजीववज्जन्म । तथामुख्यभक्तानामपीत्यवतारसाम्यं । अलौकिकत्वज्ञापकस्यभगवतासमंनृत्यादिसामर्थ्यस्यविद्यमा
नत्वाच्चिन्हसाम्यं । सौंदर्यादयस्तत्साम्यंस्पष्टमेव । तेनतासांक्रियासुस्वरूपेदेहेवानतारतम्यमित्यर्थः । भगवतोलीलांतःपातिनां
भक्तानांच स्वरूपादिभिस्तुल्यत्वंनतूत्कर्षापकर्षाविति श्लोकार्थः । तथापिभगवान्स्वार्थंतारतम्यंकरोतीत्याहुः । **तथापिया
वताकार्यंतावत्तस्यकरोतिहि** । स्वरूपादेस्तुल्यत्वेऽपिभगवान्स्वस्यकार्यंरमणंस्वस्यभक्तानांचयावतातारतम्येनसिद्ध्य
ति । तावत्तारतम्यंप्रकटयति हियुक्तोऽयमर्थः । उत्कर्षापकर्षवैचित्र्यैर्विना सम्यग्ग्रहणासिद्धेः । अतएवबाललीलादयोयुक्तस्व
रूपाभवंतीतिदिक् । एवंविशेषलीलायाःसाधनानिप्रकारांतरंचोक्त्वा सामान्यलीलायाःसाधनानिप्रकारंचाहुः । तेहीत्यारभ्यप्र
वेदित्यंतेन । **तेहिद्विधाशुद्धमिश्रभेदान्मिश्रास्त्रिधापुनः । प्रवाहादिविभेदेनभगवत्कार्यसिद्धये । पुष्ट्याविमि
श्राःसर्वज्ञाः प्रवाहेणक्रियारताः । मर्यादयागुणज्ञास्तेशुद्धाःप्रेम्णातिदुर्लभाः । एवंसर्गस्तुतेषांहिफलंत्वत्र
निरूप्यते । भगवानेवहिफलंसयथाविर्भवेद्भुवि ॥ गुणस्वरूपभेदेनतथातेषांफलंभवेत्** । तेपूर्वोक्तास्त्रयोऽपि
मार्गाःद्विधाद्विप्रकाराः शुद्धमिश्राअपिपरस्परंभेदात् । अन्यमार्गधर्मसंवलितामिश्राः तदसंवलिताःशुद्धाः मिश्राअपिपरस्परंत्रया
णांमिश्रणेन प्रत्येकंत्रिप्रकाराः । एवंभेदानांप्रयोजनमाहुः । **भगवत्कार्यसिद्धयइति** । क्रीडाभांडमिदंविश्वमित्यादिवाक्यै
र्विश्वस्यक्रीडार्थत्वात् । पुष्ट्यादीनांत्रयाणां स्वतःपरतःमिश्रणेज्ञापकान्धर्मानाहुः । **पुष्ट्याविमिश्राःसर्वज्ञाःप्रवाहेण**

क्रियारताः । **मर्यादागुणयज्ञास्तेशुद्धाःप्रेम्णातिदुर्लभाः** । पूर्वसंमान्यतोऽनुगृहीताविशेषानुग्रहंप्राप्ताः पुष्ट्याविमि
 श्रास्तेभगवदभिप्रायादिज्ञातारोभवंति । नारदादयइवसर्वज्ञत्वमेवतेषांलक्षणं । पुष्टिस्थामर्यादाविमिश्रितभगवद्धर्मज्ञातारोभवं
ति। कविप्रभृतयोनवयोगेश्वराइवपुष्टिस्थाः प्रवाहमिश्रिताः यत्किंचिद्भगवद्धर्मंज्ञात्वातीर्थाटनपराभवंति । प्रवाहस्थाःपुष्टि
विमिश्रिताः भगवद्भजनानुकूलक्रियाऽनुसारिणोभवंति । प्रवाहस्थाःमर्यादाविमिश्रिताः सत्कर्मकर्त्तारोभवंति । प्रवाहस्थाःप्रवा
हविमिश्रिताःकेवलंलौकिकक्रियारताभवंति । तएवअसुराः मर्यादामार्गीयाः पुष्टिविमिश्रिताः माहात्म्यज्ञानाद्भगवत्प्रीत्यर्थं
कर्मकर्त्तारोभवंति । मर्यादामार्गीयामर्यादामिश्रिताः स्वर्गार्थंकर्मकर्त्तारोभवंति मर्यादामार्गीयाप्रवाहमिश्रिताःलौकिकार्थंकर्म
कर्त्तारोभवंति । प्रेम्णाशुद्धेनसिद्धाः प्रेमविषयातिरिक्तस्फूर्त्तिरहिताः तेशुद्धपुष्टिस्थाः तेऽतिदुर्लभाइत्यर्थः । भगवत्कार्य
सिद्ध्ये एवंप्रकारेणतेषांसर्गोनिरूपितः ॥ हिदुक्तोयमर्थः । वैचित्र्यंविनारमणासिद्धेस्तेषांफलमत्रनिरूप्यते । तेषांफलमाहुः ।
**भगवानेवेति** । धर्मधर्मिणोरभेदात्सर्वेषांधर्मधर्मिरूपेणभगवानेवफलं । सयथा । भुविभक्तानांगृहादौन्हृदयेच यथाप्रग
टोभवेत् । गुणस्वरूपभेदेनभक्तानांवागुणस्वरूपैकनिष्ठानांपुष्टिमार्गीयाणांस्वरूपेणआनंदमात्रकर पादमुखोदरादिस्वरूपेणस्थि
त्वायथाफलंददाति । धर्मज्ञानादिपरेषुधर्मादिरूपेणस्थित्वा यथाफलंददाति । तथातत् । तथातत्तत्फलंतेषांभवतीत्यर्थः । यद्वा ।
**भगवानिति** । गुणाऐश्वर्यादयोधर्माः स्वरूपधर्मिभगवानैश्वर्यादिषड्गुणयुक्तोयस्यांतःकरणेयथायेनभावेनप्रकटोभवति
तन्प्रियंकर्त्तुतत्स्वरूपमेवतस्यफलमित्यर्थः ॥ येयथामांप्रपद्यंतेतांस्तथैवभजाम्यहमितिप्रतिज्ञानात् प्रमेयप्रमाणलीलेतयोःप्रकारां ४
श्चाभिधाय भक्तिमार्गविरोधंपरिहर्त्तुंआसक्ताविन्यारभ्यसार्धश्लोकत्रयेणसमादधते । **आसक्तौभगवानेवशापंदापयति**

क्वचित् । अहंकारेथवालोकेतन्मार्गस्थापनायहि । नतेपाखंडतांयांतिनचरोगाद्युपद्रवः । महानुभावामा
येणशास्त्रंशुद्धत्वहेतवे । भगवत्तारतम्येनतारतम्यंभजंतिहि । वैदिकत्वंलौकिकत्वकापट्यात्तेषुनान्यथा ।
वैष्णवत्वंहिसहजंततोऽन्यत्रविपर्ययः । ननुभक्तिमार्गीयाणांकथमन्येनशापेनपराभवइत्याकांक्षायामाहुः । भगवाने
वेति । पुष्टिस्थस्यलोकेलौकिकेआसक्तौसत्यांअथवाअहंकारेजाते अनयोर्भजनेंतरायरूपत्वात् । भगवानेवअन्येनशापंदाप
यतिकंचिदेव । यथा चित्रकेतौकदाचित्स्वसामर्थ्यादिज्ञापनेनाहंकारादेवमेवदूरीकरोति । यथार्जुनादेःब्राह्मणपुत्रानयनादौ ॥
भक्तिमार्गस्थापनाय । हियस्मात् । अन्यथान्येपि बहिर्मुखाःस्युः । एवंभगवतास्वेषांशिक्षार्थंदंडेकृते दंडभयात्तेभक्तिमार्गीयाः
पाखंडतांनयांति लोकवेदभक्तिमार्गविरुद्धाचरणंनकुर्वंति । विरुद्धाचरणाभावात्तेषांरोगाद्युपद्रवोनभवति। तर्हिभक्ताअपिसाधा
रणजनतुल्याएवकिमित्याकांक्षायामाहुः तेभक्तिमार्गीयामहानुभावाः प्रल्हादांबरीषादयइवयदितेशुद्धास्युः शुद्धत्वंनामभक्ति
मार्गविरुद्धधर्मराहित्येनकायवाङ्मनोभिस्तत्परत्वं । तेषांशुद्धत्वमयोजकंशास्त्रं । तच्छास्त्रं श्रुतिस्मृतीममैवाज्ञेयस्तेउल्लंघ्यवर्त्तते ।
आज्ञोछेदीममद्रोहीमद्भक्तोऽपिनमेप्रियः । अनन्यचेताःसततंयोमांस्मरतिनित्यशः । तस्याहंसुलभःपार्थनित्ययुक्तस्ययोगि
नः । मन्मनाभवेत्यादिभगवद्वाक्यं । तदुक्तंयेकुर्वंतितेशुद्धत्वान्महानुभावाभवंतीत्यभिप्रायेणोक्तं । प्रायेणेति । तत्रहेतुः ।
भगवदिति । येभजंतितुमांभक्त्येतिवाक्याद्भक्त्याभजनेन यथायथाषड्गुणयुक्तोभगवानेषांहृदयेप्रविष्टऐश्वर्यादीन्प्रकटय
ति । तयातथातारतम्यंभजंति उत्कृष्टाभवंतीत्यर्थः । लौकिकेषुइदानींप्रसिद्धेषुनरसिंहाख्यादिष्वपिप्रसिद्धिबोधकोहिशब्दः ।
ननुएतादृशानांभगवद्भक्तयैवसर्वसिद्धौवेदोक्तकर्मकरणंलौकिककरणंचकिमर्थमित्याकांक्षायामाहुः । वैदिकत्वंलौकिकत्वं

कापट्यात्तेषुनान्यथा उत्कृष्टानांभगवद्भक्तानां वेदोक्तकर्मकरणंलौकिकव्यवहारकरणंच । सक्ताःकर्मण्यविद्वांसोयथाकुर्वं
तिभारत । कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहमितिभगवद्वाक्यात् । लोकसंग्रहार्थमेववेदोक्तकर्माणि लौकिकव्यवहारंच
कापट्यंविधायस्यबहिःकर्मासक्तिंदर्शयित्वाकुर्वंति नान्यथेत्यर्थः।. तर्हितेषांमुख्यःकर्त्तव्योधर्मःकइत्याकांक्षायामाहुः। वैष्णव
त्वंहिसहजंततोन्यत्रविपर्ययः। वैष्णवत्वंभक्तिमार्गीयदीक्षापूर्वकंभगवद्भजनं सहजमादरेणकर्त्तव्योमुख्योधर्मः ततोन्यत्र
अन्यधर्मेषुएतद्विपर्ययइत्यर्थः। हियुक्तोयमर्थः। योयस्यदासः तस्यतद्भजनमेवमुख्योधर्मइति। भक्तिमार्गीयाणांव्यवस्थामुक्त्वात
त्संबंधिनामुदासीनानामन्येषांचव्यवस्थामाहुः। संबंधिनस्त्वितिश्लोकद्वयेन। संबंधिनस्तुयेजीवाःप्रवाहस्थास्तथापरे।
चर्षणीशब्दवाच्यास्तेतेसर्वेसर्ववर्त्मसु। क्षणात्सर्वत्वमायांतिरुचिस्तेषांनकुत्रचित्।. तेषांक्रियानुसारेणस
र्वत्रसकलंफलं। भक्तिमार्गीयसंबंधिनोयेतुअदीक्षिताःतथाभक्तिमार्गीयाःसंबंधिनःप्रवाहस्थाः तेचादीक्षिताःयेचर्षणीशब्दवा
च्याःसर्वमार्गेषुपरिभ्रमणशीलत्वात्। तेसर्ववर्त्मसुसर्वेषुमार्गेषु क्षणादल्पकालादेव तन्मार्गीयसंगंप्राप्य तन्मार्गधर्माचरणात्तन्मा
र्गीयसदृशाभवंति नतुतेषांकुत्रापिरुचिः स्नेहोस्ति तेषांतत्तन्मार्गीयक्रियानुरूपंकामितफलंभवतीत्यर्थः । लक्षणप्रमाणाभ्याम
सुरान्जीवानाहुः। प्रवाहस्थानित्यारभ्यश्लोकद्वयेन। प्रवाहस्थान्प्रवक्ष्यामिस्वरूपांगक्रियायुतान्। जीवास्तेह्या
सुराःसर्वेप्रवृत्तिंचेतिवर्णिताः। तेचद्विधाप्रकीर्त्यंतेह्यज्ञदुर्ज्ञविभेदतः।दुर्ज्ञास्तेभगवत्प्रोक्ताह्यज्ञास्ताननुयेपुनः
प्रवाहएवतिष्ठंति स्वोदरपोषणमात्रपराः ॥ स्वरूपदेहक्रियातत्पराः । नतुधर्मादिपराः तेजीवाःअसुराइतिज्ञेयाः तेचप्रवृत्तिंनि
वृत्तिंचेत्यादिनाभगवतावर्णिताः तेअसुराः द्विःप्रकाराःअज्ञदुर्ज्ञभेदात् प्रवृत्तिंचेत्यादिनोक्तादुर्ज्ञाः तान्येअनुसरंतितदुक्तकारिणो

भवंति तेतुअज्ञाः । ननुअसुराणामपिभक्तिःश्रूयते साकथंभवतीत्याशंकायांसमाधानमाहुः । प्रवाहेऽपिसमागत्यपुष्टिस्थ स्तैर्नयुज्यते । सोऽपितैस्तत्कुलेजातःकर्मणाजायतेयतः । वस्तुतोयस्यभक्तिर्दृश्यते सअसुरजीवोनभवति। किंतुभगवदपराधेनभक्तापराधेनवेदादिनिंदयावा प्रवाहेऽपिसमागत्यप्राप्तोऽपितैःप्रवाहस्थैर्नयुज्यते नयुक्तोभवति । नवैजनोजात्विति वाक्यात् ॥ तर्हिभक्तिमतःकथंप्रावाहिकेषुजन्मेत्यतआहुः । कर्मणाजायतेयतइति । यतःयस्मात्कर्मणाभगवदपराधादिनाप्रारब्धकर्मणावाजायते उत्पद्यते । देहस्यकर्माधीनत्वात् । यादृशंकर्मतादृशोदेहोभवतीत्यर्थः । इतिश्रीवल्लभाचार्यैःसाधनादिविभेदनाः । मार्गाःप्रोक्ताविचार्यैषुप्रविशंतिफलार्थिनः १ भक्त्याश्रीवल्लभाचार्यचरणाब्जयुगंप्रभून् । प्रणम्यकृपयातेषांयन्नादुक्ताःसुखावहाः ॥ २ ॥ श्रीमत्कल्याणरायेणश्रीगोविंदसुतेनहि । पुष्टिप्रवाहमर्यादाविवृत्तिःकृतिनाकृता इतिश्रीमद्विठ्ठलेश्वरचरणकमलैकतानश्रीकल्याणरायविरचितापुष्टिप्रवाहमर्यादाविवृत्तिःसमाप्तः ॥ ७ ॥ ७ ॥



मोहमय्यां गणपत्कृष्णाज्याख्ययंत्रालये मुद्रितं
शक १७८३ आश्विनमासितक्षपंचम्यां

